लिटः चकार
,, चकरतुः
लुटः करिता
,, करीता
लिङः कीर्यात्
लुङः अकारीत्
लटः उपस्किरति
लङः उपास्किरत्
लिटः उपचस्कार
लटः उपस्किरति
,, प्रतिस्किरति

निगरणार्थकस्य 'गृ' धातोः—

लटः गिरति
,, गिलति
लिटः जगार
,, जगाल
,, जगरिथ
,, जगलिथ
लुटः गरिता
,, गलिता (७)

*आदरार्थकस्य 'दृङ्' धातोः—

लटः आद्रियते
,, आद्रियेते
लिटः आदद्रे
,, आदद्रिषे
लुटः आदर्त्ता
लृटः आदरिष्यते

* इतोद्वावात्मनेपदिनौ ।

लिङः आदृषीष्ट
लुङः आदृत
,, आदृषाताम्

अवस्थानार्थकस्य 'धृङ्' धातोः-

लटः ध्रियते (२)

*ज्ञीप्सार्थकस्य 'प्रच्छ' धातोः—

लटः पृच्छति
लिटः पप्रच्छ
,, पप्रच्छतुः
,, पप्रच्छिथ
,, पप्रष्ठ
लुटः प्रष्टा
लृटः प्रक्ष्यति
लुङः अप्राक्षीत्

विसर्गार्थकस्य 'सृज' धातोः—

लिटः ससर्जिथ
,, सस्रष्ठ
लुटः स्रष्टा
लृटः स्रक्ष्यति
लिङः सृजेत
,, सृज्यात्
लुङः अस्राक्षीत्

शुद्ध्यर्थकस्य 'टुमस्जा' धातोः—

लटः मज्जति
लिटः ममज्ज
,, ममङ्क्थ
,, ममज्जिथ

* अथ परस्मैपदिनः षोडश ।१६।

लुटः मङ्क्ता
लृटः मङ्क्ष्यति
लुङः अमाङ्क्षीत्
,, अमाङ्क्ताम्
,, अमाङ्क्षुः
भङ्गार्थकस्य 'रुजो' धातोः—
लुटः रोक्ता
लृटः रोक्ष्यति
लुङः अरौक्षीत्
,, अरौक्ताम्
कौटिल्यार्थकस्य 'भुजो' धातोः-
स्पर्शार्थकस्य 'छुप' धातोः—
लुटः छोप्ता
लुङः अच्छौप्सीत्
हिंसार्थकस्य 'रुश' 'रिश' धातोः-
लुटः रोष्टा
लृटः रोक्ष्यति
लुटः रेष्टा
लृटः रेक्ष्यति
गत्यर्थकस्य 'लिश' धातोः-
लुङः अलिक्षत्
संस्पर्शनार्थकस्य 'स्पृश' धातोः-
लुटः स्प्रष्टा
,, स्पर्ष्टा
लृटः स्प्रक्ष्यति
,, स्पर्क्ष्यति
लुङः अस्प्राक्षीत्
,, अस्पार्क्षीत्

लुङः अस्पृक्षत्
गत्यर्थकस्य 'विच्छ' धातोः-
लटः विच्छायति
लिटः विच्छायाञ्चकार
,, विविच्छ
प्रवेशनार्थकस्य 'विश' धातोः-
लटः विशति
लुटः वेष्टा
आमर्शनार्थकस्य 'मृश' धातोः-
लुङः अमार्क्षीत्
,, अमृक्षत्
प्रेरणार्थकस्य 'णुद' धातो-
विशरणगत्यवसादनार्थकस्य
'षद्लृ' धातोः-
लटः सीदति
,, सीदति
,, सीदन्ति
शातनार्थकस्य 'शद्लृ' धातोः-१६
*सङ्गमार्थकस्य 'मिल' धातोः-
संश्लेषणार्थकस्यापि धातोः-
लटः मिलति
,, मिलते
लिटः मिमेल
,, मिमिले
मोक्षणार्थकस्य 'मुच्लृ' धातोः-
लटः मुञ्चति
,, मुञ्चते

* अथ षट्स्वरितेत । ६ ।

| | |
|---|---|
| लुटः | मोक्ता |
| *लिङः | मुच्यात् |
| लिङः | मुक्षीष्ट |
| लुङः | अमुचत् |
| ,, | अमुक्त |
| ,, | अमुक्षाताम् |

छेदनार्थकस्य 'लुप्लृ' धातोः—

| | |
|---|---|
| लटः | लुम्पति |
| लटः | लुम्पते |
| लुङः | अलुपत् |
| ,, | अलुप्त |

लाभार्थकस्य 'विद्लृ' धातोः—

| | |
|---|---|
| लटः | विन्दति |
| ,, | विन्दते |
| लिटः | विवेद |
| ,, | विविदे |
| लुटः | वेदिता |
| ,, | वेत्ता |
| ,, | परिवेत्ता |

उपदेहार्थकस्य 'लिप' धातोः—

| | |
|---|---|
| लटः | लिम्पति |
| ,, | लिम्पते |
| लुटः | लेप्ता |
| लुङः | अलिपत् |
| ,, | अलिपत |
| लुङः | अलिप्त |

क्षरणार्थकस्य 'षिच' धातोः-

| | |
|---|---|
| लटः | सिञ्चति |
| ,, | सिञ्चते |
| लुङः | असिचत् |
| ,, | असिचत |
| ,, | असिक्त |
| लटः | अभिषिञ्चति |
| लङः | अभ्यषिञ्चत् |
| लिटः | अभिषिषेच ( ६ ) |

*छेदनार्थकस्य 'कृती' धातोः-

| | |
|---|---|
| लटः | कृन्तति |
| लिटः | चकर्त |
| लुटः | कर्तिता |
| लृटः | कर्तिष्यति |
| ,, | कर्त्स्यति |
| लुङः | अकर्तीत् |

परिघातार्थकस्य 'खिद्' धातोः-

| | |
|---|---|
| लटः | खिन्दति |
| लिटः | चिखेद |
| लुटः | खेत्ता |

अवयवार्थकस्य 'पिश' धातोः-

| | |
|---|---|
| लटः | पिंशति |
| लुटः | पेशिता |
| लोटः | त्वष्टारूपाणि पिंशतु । |

* अथ त्रयः परस्मैपदिनः । ३ ।

इति तुदादिगणप्रक्रिया प्रयोगाः ॥ ६ ॥

# अथ रुधादिगणप्रक्रियाप्रयोगाः ॥ ७ ॥

*आवरणार्थकस्य 'रुधिर' धातोः-

| | |
|---|---|
| लटः | रुणद्धि |
| ,, | रुन्धः |
| ,, | रुन्धति |
| ,, | रुन्धे |
| लुटः | रोद्धा |
| लृटः | रोत्स्यति |
| ,, | रोत्स्यते |
| लोटः | रुणद्धु |
| लिङः | रुन्ध्यात् |
| लोटः | रुन्धि |
| ,, | रुणधानि |
| ,, | रुणधै |
| लङः | अरुणत् |
| ,, | अरुन्धाम् |
| ,, | अरुणत् |
| ,, | अरुणः |
| ,, | अरुणधम् |
| लुङः | अरुधत् |
| ,, | अरौत्सीत् |
| ,, | अरुद्ध |

विदारणार्थकस्य 'भिदिर' धातोः-

| | |
|---|---|
| लटः | भिनत्ति |
| ,, | भिन्त्ते |
| लुटः | भेत्ता |
| लृटः | भेत्स्यति |
| लङः | अभिनत् |
| ,, | अभिनः |
| , | अभिनदम् |
| ,, | अभिन्त |
| लुङः | अभिदत् |
| ,, | अभैत्सीत् |
| ,, | अभित्त |

द्वैधीकरणार्थकस्य 'छिदिर्' धातोः

| | |
|---|---|
| लुङः | अच्छिदत् |
| ,, | अच्छैत् |
| ,, | अच्छित्त |

विरेचनार्थकस्य 'रिचिर्' धातोः

| | |
|---|---|
| लटः | रिणक्ति |
| ,, | रिङ्क्ते |
| लिटः | रिरेच |
| ,, | रिरिचे |
| लुटः | रेक्ता |
| लङः | अरिणक् |
| लुङः | अरिचत् |
| ,, | अरैक्षीत् |
| ,, | अरिक्त |

पृथग्भावार्थकस्य 'विचिर्' धातोः-

| | |
|---|---|
| लटः | विनक्ति |
| ,, | विङ्क्ते |

संपेषणार्थकस्य 'क्षुदिर' धातोः-

* अथ नवस्वरितेत इरितश्च । ९ ।

लटः क्षणत्ति
" क्षुन्ते
लुटः क्षोत्ता
लुङः अक्षुदत्
" अक्षौत्सीत
" अक्षुत्त
योगार्थकस्य 'युजिर्' धातोः-
लुटः योक्ता
दीप्त्यर्थदेवनार्थकस्य च
'उच्छृदिर्' धातोः--
लटः छृणत्ति
" छृन्ते
लिटः चच्छर्द
" चच्छृदिषे
लिटः चच्छृत्से
लुटः छर्दिता
लृटः छर्दिष्यति
" छर्त्स्यति
लुङः अच्छृदत्
" अच्छर्दीत्
" अछर्दिष्ट
हिंसार्थानादरार्थकस्य च
'उतृदिर्' धातोः--
लटः तृणत्ति
*वेष्टनार्थकस्य 'कृती' धातोः-
लटः कृणत्ति
†दीप्त्यर्थकस्य 'ञिइन्धी' धातोः-

लटः इन्धे
" इन्त्से
लुटः इन्धिता
लोटः इन्धै
लङः ऐन्ध
" ऐन्धाः
दैन्यार्थकस्य 'खिद्' धातोः--
लटः खिन्ते
लुटः खेत्ता
विचारणार्थकस्य 'विद्' धातोः-
लटः विन्ते
लुटः वेत्ता
*विशेषणार्थकस्य 'शिष्लृ' धातोः-
लटः शिनष्टि
" शिंष्टः
" शिंषन्ति
लिटः शिशेषिथ
लुटः शेष्टा
लृटः शेक्ष्यति
लोटः शिण्ढि
" शिण्ढु
" शिनषाणि
लङः अशिनट्
लुङः अशिषत्
संचूर्णनार्थस्य 'पिष्लृ' धातोः-
लटः पिनष्टि
आमर्दनार्थकस्य 'भञ्जो' धातोः

* अथ परस्मैपदी । १ ।

† अथ त्रय आत्मनेपदिनः । ३ ।

* अथ परस्मैपदिनो द्वादश । १२ ।

लटः अनक्ति
लिटः बभञ्जिथ
,, बभङ्क्थ
लुटः भङ्क्ता

पालनार्थाभ्यवहारार्थकस्य 'भुज' धातोः--
लटः भुनक्ति
लुटः भोक्ता
लृटः भोक्ष्यति
लङः अभुनक्

हिंसार्थकस्य 'तृह' 'हिंसि' धातोः-
लटः तृणेढि
,, तृण्ढः
लिटः ततर्ह
लुटः तर्हिता
लङः अतृणेट्
लटः हिनस्ति
लिटः जिहिंस
लुटः हिंसिता

क्लेदनार्थकस्य 'उन्दी' धातोः-
लटः उनत्ति
,, उन्तः
,, उन्दति
लिटः उन्दांचकार
लङः औनत्
,, औन्ताम्
,, औन्दन्
,, औनः
लङः औनत्
,, औनदम्

व्यक्तिम्रक्षणकान्तिगत्यर्थकस्य' 'अञ्जू' धातोः--
लटः अनक्ति
,, अक्तः
,, अञ्जन्ति
लिटः आनञ्ज
,, आनञ्जिथ
,, आनङ्क्थ
लुटः अङ्क्ता
,, अञ्जिता
लोटः अङ्ग्धि
,, अनजानि
लङः आनक्
लुङः आञ्जीत्

सङ्कोचनार्थकस्य 'तञ्चू' धातोः-
लुटः तङ्क्ता
,, तञ्चिता

भयार्थचलनार्थकस्यच 'ओविजी' धातोः--
लटः विनक्ति
,, विङ्क्तः
लिटः विविजिथ
लुटः विजिता
लङः अविनक्
लुङः अविजीत्

वर्जनार्थकस्य 'वृजी' धातोः--

| | |
|---|---|
| लटः | वृणक्ति |
| लुटः | वाजता |

संपर्कार्थकस्य 'पृची' धातोः--

| | |
|---|---|
| लटः | पृणक्ति |
| लिटः | पपर्च (१२) |

इति रुधादिगणप्रक्रिया प्रयोगाः ॥ ७ ॥

## अथ तनादिगणप्रक्रिया प्रयोगाः ॥ ८ ॥

*विस्तारार्थकस्य 'तनु' धातोः--

| | |
|---|---|
| लटः | तनोति |
| ,, | तन्वः |
| ,, | तनुवः |
| ,, | तनुते |
| लिटः | ततान |
| ,, | तेने |
| लोटः | तनु |
| लुङः | अतनीत् |
| ,, | अतानीत् |
| ,, | यूयमतनिष्ट |
| ,, | अतानिष्ट |
| ,, | अतत |
| ,, | अतनिष्ट |
| ,, | अतथाः |
| ,, | अतनिष्ठाः |

दानार्थकस्य 'षणु' धातोः

| | |
|---|---|
| लटः | सनोति |
| ,, | सनुते |
| लिङः | सायात |
| लिङः | सन्यात् |
| लुङः | असात् |
| ,, | असनिष्ट |
| ,, | असाथाः |
| ,, | असनिष्ठाः |

हिंसार्थकस्य 'क्षणु' धातोः

| | |
|---|---|
| लटः | क्षणोति |
| ,, | क्षणुते |
| लुङः | अक्षणीत् |
| ,, | अक्षत |
| ,, | अक्षणिष्ट |
| ,, | अक्षथाः |
| ,, | अक्षणिष्ठाः |

'क्षिणु' च धातोः--

| | |
|---|---|
| लटः | क्षिणोति |
| ,, | क्षेणोति |
| लुटः | क्षेणितासि |
| ,, | क्षेणितासे |
| लुङः | अक्षेणीत् |
| ,, | अक्षित |
| ,, | अक्षेणिष्ट |

* अथ सप्तस्वरितेतः । ७ ।

गत्यर्थकस्य 'ऋणु' धातोः--

लटः ऋणोति

" अर्णोति

" अर्णुतः

" अर्णुवन्ति

लिटः आनृणे

लुटः अर्णितासि

लुङः अर्णीत्

" आर्त

" आर्णिष्ट

" आर्थाः

" आर्णिष्ठाः

अदनार्थकस्य 'तृणु' धातोः

लटः तृणोति

" तर्णोति

लटः तृणुते

" तर्णुते

दीप्त्यर्थकस्य 'घृणु' धातोः--

लिटः जघर्ण

" जघृणे

*याचनार्थकस्य 'वनु' धातो--ः

लटः वनुते

लिटः ववने

लटः वनोति

लिटः ववान

अवबोधनार्थकस्य 'मनु' धातोः--

लटः मनुते

* अथ द्वावनुदात्तेतौ । २ ।

लिटः मेने

*करणार्थकस्य 'डुकृञ्' धातोः--

लटः करोति

" कुरुतः

" कुर्वन्ति

" कुर्वः

" कुर्मः

लिटः चकर्थ

" चकृव

लुटः कर्ता

लृटः करिष्यति

लिङः कुर्यात्

" क्रियात्

" कृषीष्ट

लुङः अकार्षीत्

" अकृत

" अकृथाः

लटः संस्करोति

" संस्कुर्वन्ति

" परिष्करोति

लुङः पर्यष्कार्षीत्

" पर्यस्कार्षीत्

क्तान्तम्-उपस्कृताकन्या

" उपस्कृता ब्राह्मणाः

लटः एधोदकस्योपस्कुरुते

क्तान्तम् उपस्कृतं भुङ्क्ते

* अथोभयपदी । १ ।

| | | | |
|---|---|---|---|
| क्रान्तम् | उपस्कृतं ब्रूते | लिङः | संस्क्रियात् |
| लिटः | सञ्चस्कार | ,, | संस्कृषीष्ट |
| ,, | सञ्चस्करतुः | लुङः | समस्कृत |
| ,, | सञ्चस्करिथ | ,, | समस्कृषाताम् |
| ,, | सञ्चस्करिव | | |

इति तनादिगणधातु प्रक्रिया प्रयोगाः ॥८॥

## अथ क्र्यादिगणप्रक्रिया प्रयोगाः ॥ ९ ॥

*द्रव्यविनिमयार्थकस्य 'डुक्रीञ्' धातोः–

| | |
|---|---|
| लटः | क्रीणाति |
| ,, | क्रीणीतः |
| ,, | क्रीणन्ति |
| ,, | क्रीणीते |
| ,, | क्रीणाते |
| ,, | क्रीणते |
| लिटः | चिक्राय |
| ,, | चिक्रियतुः |
| ,, | चिक्रयिथ |
| ,, | चिक्रेथ |
| ,, | चिक्रियिव |
| ,, | चिक्रियिषे |
| लुटः | क्रेताः |
| लृटः | क्रेष्यति |
| लिङः | क्रीयात् |
| ,, | क्रेषीष्ट |
| लुङः | अक्रैषीत् |
| ,, | अक्रेष्ट |

* अथोभयपदिनः पञ्चदश ।१९।

तर्पणार्थकान्त्यर्थकस्य च 'प्रीञ्' धातोः--

| | |
|---|---|
| लटः | प्रीणाति |
| ,, | प्रीणीते |

पाकार्थकस्य 'श्रीञ्' धातोः--

हिंसार्थकस्य 'मीञ्' धातोः--

| | |
|---|---|
| लटः | प्रमीणाति |
| ,, | प्रमीणीतः |
| लिटः | ममौ |
| ,, | मिम्यतुः |
| ,, | ममिथ |
| ,, | ममाथ |
| ,, | मिम्ये |
| लुटः | माता |
| लृटः | मास्यति |

| | |
|---|---|
| लिङः | मीयात् |
| ,, | मासीष्ट |
| लुङः | अमासीत् |
| ,, | अमासिष्टाम् |
| ,, | अमास्त |

बन्धनार्थकस्य 'षिञ्' धातोः--

| | |
|---|---|
| लटः | सिनाति |
| ,, | सिनोति |
| लिटः | सिषाय |
| ,, | सिष्ये |
| लुटः | सेता |

आप्रवणार्थकस्य 'स्कुञ्' धातोः-

| | |
|---|---|
| लटः | स्कुनोति |
| ,, | स्कुनुते |
| ,, | स्कुनाति |
| लिटः | चुष्काव |
| " | चुष्कुवे |
| लुटः | स्कोता |
| लुङः | अस्कौषीत् |
| ,, | अस्कोष्ट (६) |

*धातवश्चत्वारः सौत्राः रोधनार्थाः माधवमतेऽन्यार्थकाः ।

| | |
|---|---|
| लटः | विष्टभ्नोति |
| ,, | विष्टभ्नाति |
| ,, | अवष्टभ्नोति |
| ,, | अवष्टभ्नाति |
| लिटः | अवतष्टम्भ |
| लुङः | व्यष्टभत् |
| ,, | व्यष्टम्भीत् |
| लटः | स्तुभ्नोति |
| ,, | स्तुभ्नाति |
| ,, | विष्कभ्नोति |
| लटः | विष्कभ्नाति |
| ,, | स्कुभ्नोति |
| ,, | स्कुभ्नाति |
| लोटः | स्तभान |
| ,, | स्तुभान |
| ,, | स्कभान |
| ,, | स्कुभान |
| ,, | पक्षे स्तभ्नुहीत्यादि |

बन्धनार्थकस्य 'युञ्' धातोः--

| | |
|---|---|
| लटः | युनाति |
| ,, | युनीते |
| लुटः | योता |

शब्दार्थकस्य 'क्नूञ्' धातोः--

| | |
|---|---|
| लटः | क्नूनाति |
| ,, | क्नूनीते |
| लुटः | क्नविता |

हिंसार्थकस्य 'द्रूञ्' जातोः--

| | |
|---|---|
| लटः | द्रूणाति |

* तत्रहि स्तम्भ्वादयश्चत्वारः सौत्रा रोधनार्था इत्येके । माधवस्तुः—प्रथमतृतीयौस्तम्भ्वार्थौ, द्वितीयोनिष्कोषणार्थः, चतुर्थो धारणार्थ इत्याह । सर्वे च परस्मैपदिनः । ४ ।

लट दृणीते
पवनार्थकस्य 'पूञ्' धातोः--
लटः पुनाति
" पुनीते
लुटः पविता
छेदनार्थकस्य 'लूञ्' धातोः--
लटः लुनाति
" लुनीते
आच्छादनार्थकस्य 'स्तॄञ्'धातो-
" स्तृणाति
" स्तृणीते
लिटः तस्तार
" तस्तरतुः
लुटः स्तरिता
" स्तरीता
लिङः स्तृणीयात्
लटः स्तृणीते
लिङः स्तीर्यात्
" स्तरिषीष्ट
" स्तीर्षीष्ट
लुङः अस्तारीत्
" अस्तारिष्टाम्
लुङः अस्तारिष्ट
" अस्तीर्ष्ट
हिंसार्थकस्य 'कॄञ्' धातोः--
लटः कृणाति
" कृणीते
लिटः चकार
लिटः चकरे
वरणार्थकस्य 'वॄञ्' धातोः--
लटः वृणाति
" वृणीते
लिटः ववार
" ववरे
लुटः वरिता
" वरीता
लिङः वूर्यात्
" वरिषीष्ट
" वूर्षीष्ट
लुङः अवारीत्
" अवारिष्टाम्
" अवारीष्ट
लुङः अवरीष्ट
" अवूर्ष्ट
कम्पनार्थकस्य 'धूञ्' धातोः--
लटः धुनाति
" धुनीते
लिटः दुधविथ
" दुधोथ
" दुधुविव
लुटः धोता
" धविता
लुङः अधावीत्
" अधवीष्ट
" अधोष्ट (१५)

हिंसार्थकस्य 'शृ' धातोः--

लिटः शश्रतुः
" शशरतुः
" शशरिव
" शश्रिव
लुटः शरिता
" शरीता
लोटः शृणीहि
लिङः शीर्यात्
लुङः अशारिष्टाम्

पालनार्थपूरणार्थकस्य च 'पृ' धातोः

लिटः पप्रतुः
" पपरतुः
लिङः पूर्यात्

वरणार्थभरणार्थकस्यच 'वृ' धातोः

भर्त्सनार्थभरणार्थकस्यच 'भृ' धातोः

हिंसार्थकस्य 'मृ' धातोः

लटः मृणाति
लिटः ममार

विदारणार्थकस्य 'दृ' धातोः

लिटः दद्रतुः
" ददुः

वयोहान्यर्थकस्य 'जॄ' धातोः--

केचित् 'झॄ' धातोः

केचित् 'धॄ' धातोः

नयार्थकस्य 'नॄ' धातोः

हिंसार्थकस्य 'कॄ' धातोः--

* अथ बध्नात्यन्ताः परस्मैपदिनः ।२४।

गत्यर्थकस्य 'ऋ' धातोः--

लटः ऋणाति
लिटः अरांचकार
लुटः अरिता
लङः आर्णात्
" आर्णीताम्
लिङ ईर्यात्
लुङः आरीत्
" आरिष्टाम्

शब्दार्थकस्य 'गॄ' धातोः--

वयोहान्यर्थकस्य 'ज्या' धातोः--

लटः जिनाति
लिटः जिज्यौ
" जिज्यतुः

गत्यर्थरेषणार्थकस्यच 'री' धातोः

श्लेषणार्थकस्य 'ली' धातोः--

लिटः ललौ
" लिलाय
लुटः लाता
" लेता

वरणार्थकस्य 'व्ली' धातोः

लटः व्लिनाति

गत्यर्थकस्य 'प्ली' धातोः--

वरणार्थकस्य 'व्री' धातोः--

भयार्थकस्य 'भ्री' धातोः--

केचित् 'भर' धातोः--

हिंसार्थकस्य 'क्षीष्' धातोः--

अवबोधनार्थकस्य 'ज्ञा' धातोः--

लटः जानाति

बन्धनार्थकस्य 'बन्ध' धातोः--

लटः बध्नाति

लिटः बबन्धिथ

" बबन्ध

लुटः बन्धा

" बन्धारौ

लृटः भन्त्स्यति

लोटः बधान

लुङः अभान्त्सीत्

" अबान्द्धाम्

" अभान्त्सुः

*सम्भक्त्यर्थकस्य 'वृङ्' धातोः--

लटः वृणीते

लिटः वव्रे

" ववृषे

" ववृढ्वे

लुटः वरिता

" वरीता

लुङः अवरिष्ट

" अवरीष्ट

" अवृत (१)

†विमोचनार्थप्रतिहर्षार्थकस्य च 'श्रन्थ' धातोः--

लटः श्रथ्नाति

लिटः श्रेथतुः

" श्रेथुः

" श्रेथिथ

" शश्राथ

" शश्राथ

" शश्रथ

विलोडनार्थकस्य 'मन्थ' धातोः--

'ग्रन्थ'संदर्भार्थकस्य 'श्रन्थ' धातोः-

अर्थ भेदा 'क्कुन्थ' धातोः

संश्लेषणार्थस्य 'कुन्थ' धातो

केचित् संक्लेशार्थकस्य च

लटः कुन्थाति

लिटः चुकुन्थ

केचित् 'कुथ' धातोः—

लिटः चुकोथ

क्षोदार्थकस्य 'मृद' धातोः—

लटः मृद्नाति

लोटः मृदान

उक्तार्थस्य 'मृड' च धातोः—

सुखार्थकस्यापि

लटः मृड्णाति

रोषार्थकस्य 'गुध' धातोः—

लटः गुध्नाति

निष्कोषार्थकस्य 'कुष' धातो—

लटः कुष्णाति

लुटः कोषिता

" निष्कोषिता

" निष्कोष्टा

---

* अथात्मनेपदी । १ ।

† इतः परस्मैपदिनः पञ्चविंशतिः। २५।

लुङः निरक्रोषीत्
" निरकुक्षत्

संचलनार्थकस्य 'क्षुभ' धातोः—
लटः क्षुभ्नाति
" क्षुभ्नीतः
लुटः क्षोभिता
लोटः क्षुभाण

हिंसार्थकस्य 'णभ' 'तुभ' धातोः—
लटः नभ्नाति
" तुभ्नाति
लटः नभते
" तोभते
" नभ्यति
" तुभ्यति

विबाधनार्थकस्य 'क्लिशू' धातोः—
लटः क्लिश्नाति
लुटः क्लेशिता
" क्लेष्टा
लुङः अक्लेशीत्
" अक्लिक्षत्

भोजनार्थकस्य 'अश' धातोः—
लटः अश्नाति
लिटः आश

उञ्छार्थकस्य 'उध्रस' धातोः—
लटः ध्रस्नाति
लिटः उध्रसांचकार

आभीक्ष्ण्यार्थकस्य 'इष' धातोः—
लटः इष्णाति
लुटः एषिता

विप्रयोगार्थकस्य 'विष' धातोः—
लटः विष्णाति
लुटः वेष्टा

स्नेहनसेवनपूरणार्थकस्य च 'प्रुष' 'प्लुष' धातोः—
लटः प्रुष्णाति
" प्लुष्णाति

पुष्ट्यर्थकस्य 'पुष' धातोः—
लुटः पोषिता

स्तेयार्थकस्य 'मुष' धातोः—
लुटः मोषिता

भूतप्रादुर्भावार्थकस्य 'खच' धातोः—
लटः खच्नाति
" खौनाति
लिटः चखाव
लुटः खविता
लोटः खौनीहि

उञ्छार्थस्य 'हिठ' च धातोः—
लटः हिठ्णाति (२५)

*उपादानार्थकस्य 'ग्रह' धातोः—
लटः गृह्णाति
" गृह्णीते
लुटः ग्रहीता
लिटः जग्रहिथ

* अथोभयपदी । १ ।

लिङः गृह्यात्
" गृहीपीष्ट
लुङः अग्रहीष्टाम्
" अग्रहीष्ट
" अग्रहीषाताम्
" अग्रहीषत (१)

इति क्र्यादिगणधातुप्रक्रियाप्रयोगाः ॥ ९ ॥

## अथ चुरादिगणधातुप्रक्रियाप्रयोगाः ॥१०॥

*स्तेयार्थकस्य 'चुर' धातोः—
लटः चोरयति
" चोरयते
लिटः चोरयामास
लुटः चोरयिता
लिङः चार्यात्
" चोरयिषीष्ट
लुङः अचूचुरत्
" अचुचूरत्
स्मृत्यर्थकस्य 'चिति' धातोः—
लटः चिन्तयति
लुङः अचिचिन्तत्
लिङः चिन्त्यात्
लटः चिन्त्यते
" चिन्तति
लिङः चिन्तेत्
लिटः जगाण
" जगणतुः
संकोचार्थकस्य 'यत्रि' धातोः—

* इतः परस्मैपदिनः । १६४ ।

लटः यन्त्रयति
लटः यन्त्रति-माधवः
परिहासार्थकस्य 'स्फुडि' धातोः—
लटः स्फुण्डयति
" स्फुण्डति
केचित् 'स्फुटि' धातोः—
लटः स्फुण्टयति
दर्शनार्थाङ्कनार्थकस्य 'लक्ष' धातोः-
अनृतभाषणार्थकस्य 'कुद्रि' धातोः-
लटः कुन्द्रयति
उपसेवार्थकस्य 'लुड' धातोः—
लटः लाडयति
स्नेहनार्थकस्य 'मिदि' धातोः—
लटः मिन्दयति
" मिन्दति
उत्क्षेपणार्थकस्य 'आलडि' धातोः-
लटः आलण्डयति
" ओलण्डति
" लण्डयति
" लण्डति

लटः उलण्डयति

अपवारणार्थकस्य 'जल' धातोः—

केचित् 'लज' धातोः—

अवगाहनार्थकस्य 'पीड' धातोः—

लटः पीडयति

लुङः अपीपिडत्

„ अपिपीडत्

अवस्यन्दनार्थकस्य 'नट' धातोः—

प्रयत्नार्थकस्य 'श्रन्थ' धातोः—

प्रस्थानार्थकस्येतिकेचित्—

संयमनार्थकस्य 'बध' धातोः—

लटः बाधयति

चन्द्रस्तु 'बन्ध' धातोः—

पूरणार्थकस्य 'पृ' धातोः—

लटः पारयति

बलार्थप्राणनार्थकस्य 'ऊर्ज' धातोः—

परिग्रहार्थकस्य 'पक्ष' धातोः—

प्ररणार्थकस्य 'वर्ण' चूर्ण, धातोः—

केचित्वर्णनार्थकस्य 'वर्ण' धातो—

प्रख्यानार्थकस्य 'प्रथ' धातोः—

लटः प्राथयति

लुङः अपप्रथत्

प्रक्षेपार्थकस्य 'पृथ' धातोः—

लुङः अपीपृथत्

„ अपपर्थत्

केचित् 'पथ' धातोः—

लटः पाथयति

बन्धनार्थकस्य 'षम्ब' 'सम्ब' धातोः—

लटः सम्बयति

लुङः अससम्बत्

केचित् 'शम्ब' च धातोः—

लुङः अशशम्बत्

केचित् 'साम्ब' धातोः—

अदनार्थकस्य 'भक्ष' धातोः—

छेदनार्थभर्त्सनार्थकस्य 'कुट्ट' धातोः—

केचित् पूरणार्थकस्य—

लटः कुट्टयति

अल्पीभावार्थकस्य 'पुट्ट' 'चुट्ट' धातोः—

अनादरार्थकस्य 'अट्ट' 'षुट्ट' धातोः—

लटः अट्टयति

लुङः आट्टिटत्

स्तेयार्थकस्य 'लुण्ठ' धातोः—

लटः लुण्ठयति

„ लुण्ठति

असंस्कारार्थगत्यर्थकस्य च 'शठ' 'श्वठ' 'श्वठि' च धातोः—

हिंसाबलादाननिकेतनाद्यर्थकस्य 'तुजि' 'पिजि' धातोः—

लटः तुञ्जयति

„ पिञ्जयति

„ तुञ्जति

„ पिञ्जति

केचित् 'तुज' 'पिज' धातोः—

केचित् 'लजि' 'लुजि' धातोः—

गत्यर्थकस्य 'पिस' धातोः—
लटः पेसयति
" पेसति
सामप्रयोगार्थकस्य 'षान्त्व' धातोः-
परिभाषणार्थकस्य 'श्वल्क' 'वल्क' धातोः—
स्नेहनार्थकस्य 'ष्णिह्' धातोः—
केचित् 'स्फिट' धातोः—
अनादरार्थकस्य 'स्मिट' धातोः—
लुङः असिस्मिटत्
अनादरार्थकस्य 'ष्मिङ्' धातोः—
लटः स्माययते
श्लेषणार्थकस्य 'श्लिष' धातोः—
गत्यर्थकस्य 'पथि' धातोः—
लटः पन्थयति
" पन्थति
कुट्टनार्थकस्य 'पिच्छ' धातोः—
संवरणार्थकस्य 'छदि' धातोः—
लटः छन्दयति
" छन्दति
दानार्थकस्य 'श्रण' धातोः—
लटः विश्राणयति
आघातार्थकस्य 'तड' धातोः—
लटः ताडयति
भेदनार्थकस्य 'खड' 'खडि' 'कडि' धातोः—
लटः खाडयति
" खण्डयति

लट कण्डयति
रक्षणार्थकस्य 'कुडि' धातोः—
वेष्टनार्थकस्य 'गुडि' धातोः—
केचित्—रक्षणार्थकस्य
केचिदुक्तार्थकस्य 'कुठि' धातोः—
लटः अवकुण्ठयति
" अवकुण्ठति
केचित् 'गुठि' धातोः—
खण्डनार्थकस्य 'खुडि' धातोः—
विभाजनार्थकस्य 'वटि' धातोः—
केचित् 'वडि' धातोः—
भूषार्थहर्षार्थकस्य च 'मडि' धातोः—
कल्याणार्थकस्य 'मडि' धातोः—
वमनार्थकस्य 'छर्द' धातोः—
आदरार्थानादरार्थकस्य 'पुस्त' 'बुस्त' धातोः—
संचोदनार्थकस्य 'चुद' धातोः—
नाशनार्थकस्य 'नक्क' 'धक्क' धातोः—
लटः प्रनक्कयति
व्यथनार्थकस्य 'चक्क' 'चुक्क' धातोः—
शौचकर्मार्थकस्य 'क्षल' धातोः—
प्रतिष्ठार्थकस्य 'तल' धातोः—
उन्मानार्थकस्य 'तुल' धातोः—
लटः तोलयति
लुङः अतूतुलत्
कथं तुलयति तुलना
उत्क्षेपार्थकस्य 'दुल' धातोः—

महत्त्वार्थकस्य 'पुल' धातोः—
समुच्छ्रायार्थकस्य 'चुल' धातोः—
रोहणार्थकस्य 'मूल' धातोः—
क्षेपार्थकस्य 'बिल' धातोः—
भेदनार्थकस्य 'बिल' धातोः—
स्नेहनार्थकस्य 'तिल' धातोः—
भृत्यर्थकस्य 'चल' धातोः—
रक्षणार्थकस्य 'पाल' धातोः—
हिंसार्थकस्य 'लूष' धातोः—
मानार्थकस्य 'शुल्ब' धातोः—
'शू ' च धातोः—
छेदनार्थकस्य 'चुट' धातोः—
सञ्चूर्णनार्थकस्य 'मुट' धातोः—
नाशनार्थकस्य 'पडि' 'पसि' धातोः—

लटः पण्डयति
,, पण्डति
,, पंसयति
,, पंसति

मार्गसंस्कारार्थगत्यर्थकस्य 'व्रज' धातोः—
अतिस्पर्शनार्थकस्य 'शुल्क' धातो-
गत्यर्थकस्य 'चपि' धातोः—

लटः चम्पयति
,, चम्पति

क्षान्त्यर्थकस्य 'क्षपि' धातोः—

लटः क्षम्पयति
,, क्षम्पति

कृच्छ्रजीवनार्थकस्य 'छजि' धातोः—
गत्यर्थकस्य 'श्वर्त' धातोः—
'श्वभ्र' च धातोः—
ज्ञानार्थज्ञापकार्थस्य 'शप' धातोः

लटः शेपयति

परिवेषणार्थकस्य 'यम' च धातोः—

लटः यमयति चन्द्रम्

परिकल्पनार्थस्य 'चह' धातोः—

लटः चहयति
लुङः अचीचहत्
,, अचचहत्

केचित् 'चप्' धातोः

लटः चपयति

केचित् त्यागार्थकस्य 'रह' धातोः—

लुङः अरीरहत्
,, अररहत्

प्राणनार्थकस्य 'बल' धातोः—

लटः बलयति

चयनार्थकस्य 'चिञ्' धातोः—

लटः चपयति
,, चययति
,, चयते
,, प्रणिचयति
,, प्रनिचयति

चलनार्थस्य 'घट्ट' धातोः
संवार्थकस्य 'मुस्त' धातोः—
संवरणार्थकस्य 'खट्ट' धातोः—
हिंसार्थकस्य 'फट्ट' स्फिट्ट—

'चुवि' धातोः
संघातार्थकस्य 'पुल' धातोः—
केचित् 'पूर्ण' 'पुर्ण' धातोः—
अभिवर्धनार्थकस्य 'पुंस' धातोः—
बन्धनार्थकस्य 'टकि' धातोः—
लटः टङ्कयति
" टङ्कति
कान्तिकरणार्थकस्य 'धूस' धातोः-
लटः धूसयति
वर्णार्थकस्य 'कीट' धातोः—
सङ्कोचनार्थकस्य 'चूर्ण' धातोः—
पूजार्थकस्य 'पूज' धातोः—
स्तवनार्थतपनार्थकस्यच 'अर्क'
धातोः—
आलस्यार्थकस्य 'शुठ' धातोः—
शोषणार्थकस्य 'शुठि' धातोः—
लुटः शुण्ठयति
लुटः शुण्ठति
प्रेरणार्थकस्ये 'जुठ' धातोः—
शब्दार्थकस्य 'गज' 'मार्ज' च
धातोः—
लटः गजयति
" मार्जयति
'मर्च' च धातोः—
लटः मर्चयति
प्रस्रवणार्थस्रावणार्थकस्य च 'दृ'
धातोः—
विस्तारपचनार्थकस्य 'पचि'
धातोः

लटः पञ्चयति
निशानार्थकस्य 'तिज' धातोः—
लटः तेजयति
संशब्दनार्थकस्य 'कृत' धातोः—
लटः कीर्तयति
लुङः अचीकृतत्
" अचिकीर्तत्
छेदनार्थपूरणार्थकस्यच 'वर्ध'
धातोः—
आच्छादनार्थकस्य 'कुबि' धातोः-
लटः कुम्बयति
केचित् 'कुभि' धातोः—
अदर्शनार्थकस्य 'लुबि' 'तुबि'
धातोः—
केचित् अर्दनार्थकस्य
व्यक्तवार्थगकस्य 'ह्लप्' धातोः-
केचित् 'क्लप' धातोः—
छेदनार्थकस्य 'चुटि' धातोः—
प्रेरणार्थकस्य 'इल' धातोः—
लटः एलयति
लुङः ऐलिलत्
म्लेच्छनार्थकस्य 'म्लक्ष' धातोः-
अव्यक्तवागर्थकस्य 'म्लेच्छ'
धातोः—
हिंसार्थकस्य 'ब्रूस' 'वर्ह' धातोः-
शब्दार्थकस्य 'गर्ज' 'गर्द' धातोः-
अभिकाङ्क्षार्थकस्य 'गर्ध' धातोः-
निकेतनार्थकस्य 'गुर्द' 'पुर्व'
धातोः—

रक्षणार्थमोक्षणार्थकस्यच 'जसि' धातोः—

लटः जंसयति

" जंसति

स्तुत्यर्थकस्य 'ईड' धातोः—

हिंसार्थकस्य 'जसु' धातोः—

संघातार्थकस्य 'पिडि' धातोः--

रोषार्थकस्य 'रुष' धातोः--

केचित् 'रुठ' धातोः--

क्षेपार्थकस्य 'डिप' धातोः--

समुच्छ्रायार्थकस्य 'ष्टुप' धातोः--(१६४)

*संचेतनार्थकस्य 'चित' धातोः--

लटः चेतयते

लुङः अचीचितत्

दंशनार्थकस्य 'दशि' धातोः--

लटः दंशयते

लुङः अददंशत

लटः दंशति

दर्शनार्थदंशनार्थकस्य 'दसि' 'दक्ष' धातोः—

लटः दंसयते

" दंसति

संघातार्थकस्य 'डप' 'डिप' धातोः--

कुटुम्बधारणार्थकस्य 'तन्त्रि' धातोः--

लटः तन्त्रयते

" कुटुम्बयते

लुप्तपरिभाषणार्थकस्य 'मन्त्रि' धातोः

ग्रहणार्थसंश्लेपणार्थकस्यच 'स्पश' धातोः--

तर्जनार्थकस्य 'तर्ज' 'भर्त्स' धातोः-

अर्दनार्थकस्य 'वस्त' 'गन्ध' धातोः—

लटः वस्तयते

" गन्धयते

हिंसार्थकस्य 'विष्क' धातोः—

केचित् 'हिष्क' धातोः—

परिमाणार्थकस्य 'निष्क' धातोः-

ईप्सार्थकस्य 'लल' धातोः—

सङ्कोचार्थकस्य 'कण' धातोः—

पूरणार्थकस्य 'तूण' धातोः—

आशार्थविशङ्का कस्य च 'भ्रूण' धातोः—

श्लाघर्थकस्य 'शठ' धातोः—

पूजार्थकस्य 'यक्ष' धातोः—

वितर्कार्थकस्य 'स्यम' धातोः—

उद्यमनार्थकस्य 'गुर' धातोः—

आलोचनार्थकस्य 'शम' 'लक्ष' धातोः--

लटः शामयते

अवक्षेपणार्थकस्य 'कुत्स' धातोः-

छेदनार्थकस्य 'त्रुट' 'कुट' धातोः-

स्रवणार्थकस्य 'गल' धातोः--

* आकुस्मादात्मनेपदिनः । ४३ ।

आमण्डनार्थकस्य 'मल' धातोः--
आप्रदानार्थावसानार्थकस्य च
'कुट' धातोः--
प्रतापनार्थकस्य 'कुट्ट' धातोः--
प्रलम्भनार्थकस्य 'वञ्चु' धातोः-
शक्तिबन्धनार्थकस्य 'वृष' धातोः-
लटः वर्षयते
तृप्तियोगार्थकस्य 'मद' धातोः—
लटः मदय
परिकूजनार्थकस्य 'दिवु' धातोः-
विज्ञानार्थकस्य 'गृ' धातोः--
लटः गारयते
चेतनाख्याननिवासाद्यर्थकस्य
'विद' धातोः--
लटः वेदयते
सत्तायां विद्यते ज्ञाने-
वेत्ति विन्ते विचारणे।
विन्दते विन्दति प्राप्तौ-
श्यन् लुक् श्नम् शेष्विदं क्रमात्॥१।
स्तम्भार्थकस्य 'मान' धातोः--
लटः मानयते
जुगुप्सार्थकस्य 'यु' धातोः--
लटः यावयत
कुत्सितस्मयनार्थकस्य 'कुस्म'
धातोः--
लटः कुस्मयते
*लुङः अचुकुस्मत (४३)

* इत्याकुस्मीयाः। ४३।

*अध्ययनार्थकस्य 'चर्च' धातोः--
भाषणार्थकस्य 'बुक' धातोः--
उपसर्गादाविष्कारार्थ भाषणार्थकस्य च 'शब्द' धातोः--
लटः प्रतिशब्दयति
,, शब्दयति
निमीलनार्थकस्य 'कण' धातोः--
लटः काणयति
लुङः अचीकणत्
,, अचकाणत्
नाशनार्थकस्य 'जभि' धातोः--
लटः जम्भयति
,, जम्भति
क्षरणार्थकस्य 'षूद' धातोः--
लटः सूदयति
लुङः असूषुदत
ताडनार्थकस्य 'जसु' धातोः--
लटः जासयति
,, जसति
बन्धनार्थकस्य 'पश' धातोः--
लटः पाशयति
रोगार्थकस्य 'अम' धातोः--
लटः आमयति
,, आमयति
भेदनार्थकस्य 'चट' 'स्फुट' धातोः--
संघातार्थकस्य 'घट' धातोः--
लटः घाटयति

* इतः परस्मैपदिनः। ६७।

मर्दनार्थकस्य 'दिवु' धातोः--
लटः देवतीत्यपि
प्रतियत्नार्थकस्य 'अर्ज' धातोः--
लटः अर्जयति द्रव्यम्
विशब्दनार्थकस्य 'घुषिर्' धातोः-
लटः घोषयति
,, घोषति
लुङः अघुषत्
,, अघोषीत्
,, अजूघुषत्
सातत्यार्थकस्य 'आङः 'क्रन्द'
धातोः--
लटः आक्रान्दयति
केचित् क्रन्दसातत्यार्थकस्य
'आङः घुषि' धातोः--
लटः आघोषयति
शिल्पयोगार्थकस्य 'लस' धातोः-
अलङ्करणार्थकस्य 'तसी' 'भूष'
धातोः--
लटः अवतंसयति
,, अवतंसति
,, भूषयति
पूजार्थकस्य 'अर्ह' धातोः--
नियोगार्थकस्य 'ज्ञा' धातोः--
लटः आज्ञापयति
विश्राणनार्थकस्य 'भज' धातोः-
प्रसहनार्थकस्य 'शृधु' धातोः--
लुङः अशशर्धत्
, अशीशृधत्
निकारार्थोऽस्कारार्थकस्य 'यत'
धातोः--
आस्वादनार्थकस्य 'रक' 'लग'
धातोः--
केचित् 'रघ' 'रग' धातोः--
विशेषणार्थकस्य 'अञ्चु' धातोः-
लटः अञ्चयति
,, अञ्चति
चित्रीकरणार्थकस्य 'लिगि'
धातोः--
लटः लिङ्गयति
,, लिङ्गति
संसर्गार्थकस्य 'मुद' धातोः--
लटः-मोदयति सक्तून् घृतेन
धारणार्थकस्य 'त्रस' धातोः--
केचित् ग्रहणार्थकस्यवारणा-
र्थकस्य च
उञ्छार्थकस्य 'उध्रस' धातोः--
लटः ध्रासयति
,, उध्रासयति
प्रमोचनार्थमोदनार्थकस्यच
'मुच' धातोः
स्नेहस्वेच्छापहरणार्थकस्य
'वस' धातोः--
संशयार्थकस्य 'चर' धातोः--
सहनार्थहसनार्थकस्यच '
'च्युस' धातोः--

लटः चावयति
,, चयोसयति
अवकल्कनार्शाच्चन्तनार्थकस्यच
'भुवो' धातोः--
लटः भावयति
उक्तार्थकस्य 'कृप' धातोः--
लटः कल्पयति
ग्रहणार्थकस्य 'ग्रस' धातोः—
लटः ग्रासयति फलम्
धारणार्थकस्य 'पुष' धातोः--
लटः पोषयत्याभरणम्
विदारणार्थकस्य 'दल' धातोः--
लटः दालयति
भाषार्थकस्य 'पट' 'पुट' 'लुट'
'तुजि' 'मिजि' 'पिजि' 'लुजि'
'भजि' 'लघि' 'त्रसि' 'पिसि'
'कुसि' 'दशि' 'कुशि' 'घट'
'घटि' 'बृहि' 'वर्ह' 'वल्ह' 'गुप'
'धूप' 'विच्छ' 'चीव' 'पुथ'
'लोकृ' 'लोचृ' 'णद' 'कुप'
'तर्क' 'वृतु' 'वृधु' धातोः--
लटः पाटयति
,, पोटयति
,, लोटयति
,, तुञ्जयति
,, तुञ्जति
,, घाटयति
,, घण्टयति
लुङः अलुलोकत्
,, अलुलोचत्
लटः वर्तयति
,, वर्धयति
,, वर्तति
,, वर्धति
अपिच--'रुट' 'लजि' 'अजि'
'दसि' 'भृशि' 'रुशि' 'शकि'
'नट' 'पुटि' 'जि' 'चि' 'रघि'
'लघि' 'अहि' 'रहि' 'महि'
'लडि' 'तड' 'नल' धातोः--
आप्यायनार्थकस्य 'पूरी' धातोः--
लटः पूरयति
,, पूरति
हिंसार्थकस्य 'रुज' धातोः--
आस्वादनार्थकस्य 'ष्वद' 'स्वाद'
धातोः—
लुङः असिष्वदत्
,, असिस्वदत् (५७)
*संयवनार्थकस्य 'युज' 'पृच'
धातोः--
लटः योजयति
लटः योजति
लुङः अयौक्षीत्
लटः पर्चयति
लटः पर्चति
लुटः पर्चिता
लुङः अपर्चीत्

* अथाकुस्मायाः । ४१ ।

पूजार्थकस्य 'अर्च' धातोः--

मर्षणार्थकस्य 'षह' धातोः--

लटः साहयति

सएवायंनागः सहतिकलहेभ्यः परिभवम्--

क्षेपार्थकस्य 'ईर' धातोः--

द्रवीकरणार्थकस्य 'ली' धातोः--

लटः लापयति

,, लयति

लुटः लेता

वर्जनार्थकस्य 'वृजी' धातोः--

लटः वर्जयति

,, वर्जति

आवरणार्थकस्य 'वृञ्' धातोः--

लटः वारयति

,, वरति

,, वरते

लुटः वरिता

,, वरीता

वयोहान्यर्थकस्य 'जॄ' धातोः--

लटः जारयति

,, जरति

लुटः जरिता

,, जरीता

उक्तार्थकस्य 'ज्रि' धातोः--

लुटः ज्राययति

,, ज्रयति

लुटः ज्रेता

वियोजनार्थसंपर्चनार्थकस्यच 'रिच' धातोः--

लटः रेचयति

,, रेचति

लुटः रेक्ता

असर्वोपयोगार्थकस्य 'शिष' धातोः--

लटः शेषयति

,, शेषति

लुटः शेष्टा

लुङः अशिक्षत्

दाहार्थकस्य 'तप' धातोः--

लटः तापयति

,, तपयति

लुटः तप्ता

तृप्त्यर्थकस्य 'तृप' धातोः--

केचित् संदीपनार्थकस्य

लटः तर्पयति

,, तर्पति

लुटः तर्पिता

संदीपनार्थकस्य 'छृदी' धातोः

लटः छर्दयति

,, छर्दति

लुटः छर्दिता

लृटः छर्दिष्यति

केचित्–संदीपनार्थकस्य 'चृप' 'छृप' 'दृप' धातोः--

लटः चर्पयति

लटः छर्पयति
भयार्थकस्य 'दर्भी' धातोः--
" दर्भति
लुटः दर्भिता
सन्दर्भार्थकस्य 'दभ' धातोः--
मोक्षणार्थाहिंसार्थकस्यच 'श्रथ' धातोः--
गत्यर्थकस्य 'मी' धातोः--
लटः माययति
" मयति
लुटः मेता
बन्धनार्थकस्य 'ग्रन्थ' धातोः--
लटः ग्रन्थयति
" ग्रन्थति
आमर्षणार्थकस्य 'शीक' 'चीक' च धातोः--
*हिंसार्थकस्य 'अर्द' धातोः--
लटः अर्दयति
" अर्दति
लटः अर्दते
हिंसार्थकस्य 'हिंसि' धातोः--
लटः हिंसयति
" हिंसति
" हिनस्तीतिगतम्
पूजार्थकस्य 'अर्ह' धातोः--
पद्यर्थार्थकस्य 'आङः षद' धातोः-
लटः आसादयति
" आसदिति

* स्वरितेत् । १ ।

लुटः आसत्ता
लुङः आसात्सीत्
शौचकर्मार्थकस्य 'शुन्ध' धातोः
लुटः शुन्धिता
लुङः अशुन्धीत्
" अशुन्धीष्टाम्
†अपवारणार्थकस्य 'छद' धातोः-
परितर्कणार्थकस्य 'जुष' धातोः-
केचित्-परितर्पणार्थकस्य
लटः जोषयति
" जोषति
तुदादौ जुषते तु-
‡कम्पनार्थकस्य 'धूञ्' धातोः--
लटः धूनयति
" धूवति
" धवते
" धावयति (३३)
धूनोति चम्पकवनानिधुनोत्यशोकं-
चूतं धुनाति धुवतिस्फुटितातिमुक्तम् ।
वायुर्विधूनयतिचम्पकपुष्परेणू
न्यत्कानने धवतिचन्दनमञ्जरीश्च ॥ २ ॥
तर्पणार्थकस्य 'प्रीञ्' धातोः--
लटः प्रीणयति
" प्राययति
" प्रयति
" प्रयते
सन्दर्भार्थकस्य 'श्रन्थ' 'ग्रन्थ' धातोः-

† स्वरितेत् । १ ।
‡ धूञ्प्रीञोरप्युभयपदे । २ ।

*लम्भनार्थकस्य 'आप्लृ' धातोः-
लटः आपयति
" आपति
लुङः आपत्
लुट आप्ता
लटः आपते
श्रद्धार्थोपकरणार्थकस्यच 'तनु' धातोः--
लट तानयति
" वितानयति
" तनति
लटः वितनति
केचित्-श्रद्धार्थोपहननार्थकस्यच 'चन' धातोः--
लटः चानयति
" चनति
†सन्देशवचनार्थकस्य 'वद' धातोः-
लटः वादयति
" वदति
" वदते
लिटः ववदथुः
" ववदिथ
" ववदे
लिङः वद्यात्
परिभाषणार्थकस्य 'वच' धातोः-
लटः वाचयति
" वचति

लुटः वक्ता
लुङः अवाक्षीत्
पूजार्थकस्य 'मान' धातोः---
लटः मानयति
" मानति
लुटः मनिता
‡स्तम्भार्थकस्य—
लटः मानयते
" मन्यते
" मनुते(४२)
§प्राप्त्यर्थकस्य 'भू' धातोः--
लटः भावयते
" भवते
" भवति
विनिन्दनार्थकस्य 'गर्ह' धातोः-
अन्वेषणार्थकस्य 'मार्ग' धातोः--
¶शोकार्थकस्य 'कडि' धातोः--
लटः कण्डते(४)
शौचार्थालङ्कारार्थकस्यच 'मृजू' धातोः--
लटः मार्जयति
" मार्जति
लुटः मार्जिता
लटः मार्ष्टि

* अयं स्वरितेदिति केचित्। १ ।
† स्वरितेत्, केचिदनुदात्तेत्। १ ।
‡ इत्याकुस्मीयाः । ४२ ।
§ इत्यात्मनेपदी'णिच्सन्नियोगेनात्मनेपदमिति केचित् ।
¶ इत्यात्मनेपदीगतः ।

*तितिक्षार्थकस्य 'मृष' धातोः—
लटः मर्षयति
" मर्षति
" मर्षते
" मृष्यति
" मृष्यते
" मर्षति
†प्रसहनार्थकस्य 'धृष' धातोः—
लटः धर्षयति
" धर्षति (४८)
‡वाक्यप्रबन्धार्थकस्य 'कथ' धातोः—
लटः कथयति
" अचकथत्
ईप्सार्थकस्य 'वर' धातोः
लटः वरयति
" वारयतीतिगतम्
संख्यानार्थकस्य 'गण' धातोः—
लटः गणयति
लुङः अजगणत्
" अजीगणत
सम्यगवभाषणार्थकस्य 'शठ' 'श्वठ' धातोः—
ग्रन्थार्थकस्य 'पट' 'वट' धातोः
त्यागार्थकस्य 'रह' धातोः—
लटः अररहत्

* स्वरितेव । १ ।
† इत्याधृषीयाः । ४९ । ३ ।
‡ अथादन्ताः । ४९ ।

स्वशब्दार्थकस्य 'स्तन' 'गदी' धातोः—
लटः स्तनयति
" गदयति
लुङः अजगदत्
गत्यर्थकस्य वा 'पत' धातोः—
लटः पतयति
" पतति
लिटः पतांचकार
लुङः अपतीत्
लटः पातयति
लुङः अपीपतत्
अनुपसर्गात्गत्यर्थकस्य 'पष' धातोः—
लटः पषयति
आक्षेपार्थकस्य 'स्वर' धातोः—
लटः स्वरयति
प्रतियत्नार्थकस्य 'रच' धातोः—
" रचयति
गत्यर्थसंख्यानार्थकस्यच 'कल' धातोः—
परिकल्कनार्थकस्य 'चह' धातोः—
पूजार्थकस्य 'मह' धातोः—
लटः महयति
" महतीतिगतंपूर्वम्
दौर्बल्यार्थकस्य 'सार' 'कृप' 'श्रथ' धातोः—
लटः सारयति
" कृपयति
" श्रथयति

ईप्सार्थकस्य 'स्पृह' धातोः--
क्रोधार्थकस्य 'भाम' धातोः--
लुङः अबभामत्
शून्यार्थकस्य 'सूच' धातोः--
लटः सूचयति
लुङः असुसूचत्
गवेषणार्थकस्य 'खेट' 'खेड' 'खोट' च धातोः--
क्षेपार्थकस्य 'खोट' धातोः--
उपलेपनार्थकस्य 'गोम' धातोः--
लुङः अजुगोमत
क्रीडार्थकस्य 'कुमार' धातोः--
लटः अचुकुमारत
उपधारणार्थकस्य 'शील' धातोः-
सान्त्वप्रयोगार्थकस्य 'साम' धातोः--
लटः अससामत्
" असीषमत्
कालोपदेशार्थकस्य 'वेल' धातोः-
लटः वेलयति
केचित् 'काल' धातोः--
लटः कालयति
लवनार्थपवनार्थकस्य च 'पल्यूल' धातोः--
सुखार्थसेवनार्थकस्य च 'वात' धातोः--
लटः वातयति
लुङः अववातत्

मार्गणार्थकस्य 'गवेष' धातोः--
लटः अजगवेषत्
उपसेवार्थकस्य 'वास' धातोः
आच्छादनार्थकस्य 'निवास' धातोः
लटः अनिनिवासत्
पृथक्कर्मार्थकस्य 'भाज' धातोः--
प्रीत्यर्थदर्शनार्थकस्य च 'सभाज' धातोः--
केचित्-प्रीत्यर्थसेवनार्थकस्य--
लटः सभाजयति
परिहाणार्थकस्य 'ऊन' धातोः--
लटः ऊनयति
लुङः औननत्
" माभवानूननत्
शब्दार्थकस्य 'ध्वन' धातोः--
लटः अदध्वनत्
परितापार्थकस्य 'कूट' धातोः--
केचित् परिदाहार्थकस्य
आमन्त्रणार्थकस्य 'सङ्केत' 'ग्राम' 'कुण' 'गुण' धातोः
'कूट' च धातोः--
लटः कूटयति
" सङ्केतयति
" ग्रामयति
" कुणयति
" गुणयति
श्रावणार्थनिमन्त्रणार्थकस्य च 'केत' धातोः--
लटः केतयति

आमन्त्रणार्थकेतनार्थकस्यच 'कुण'
'गुण' धातोः-
संकोचनार्थकस्य 'कूण' धातोः-
चौर्यार्थकस्य 'स्तेन' धातोः--
लुङः अतिस्तेनत् (४६)
*गत्यर्थकस्य 'पद्' धातोः--
लटः पदयते
लुङः अपपदत्
ग्रहणार्थकस्य 'गृह' धातोः--
लटः गृहयते
अन्वेषणार्थकस्य 'मृग' धातोः-
लटः मृगयते
विस्मापनार्थकस्य 'कुह' धातोः-
विक्रान्त्यर्थकस्य 'शूर' 'वीर'
धातोः--
परिबृंहणार्थकस्य 'स्थूल' धातोः-
लटः स्थूलयते
लुङः अतुस्थूलत
उपयाञ्चार्थकस्य 'अर्थ' धातोः-
लटः अर्थयते
लुङः आर्तथत्
सन्तान क्रियार्थकस्य 'सत्र'
धातोः--
" अससत्रत्
सनन्तम् सिसत्रयिषते
मनार्थकस्य 'गर्व' धातोः--
लटः गर्वयते (६)
*वेष्टनार्थकस्य 'सूत्र' धातोः--
लटः सूत्रयति
लुङः असुसूत्रत्
प्रस्रवणार्थकस्य 'मूत्र' धातोः--
लटः मूत्रयति
" मूत्रति
पारूष्यार्थकस्य 'रूक्ष' धातोः--
कर्मसमाप्त्यर्थकस्य 'पार' 'तीर'
धातोः--
लुङः अपपारत्
" अतितीरत्
संसर्गार्थकस्य 'पुट' धातोः--
लटः पुटयति
केचित्-दर्शनार्थकस्य 'धेक'
धातोः--
लुङः अदिधेकत्
शैथिल्यार्थकस्य 'कत्र' धातोः--
लटः कत्रयति
" कत्रति
केचित्-'कर्त' धातोः--
लटः कर्तयति
" कर्तति
" पटुमाचष्टे पटयति
लुङः अपीपटत्
" अपपटत्

* आगर्वादात्मनेपदिनः । ९ ।

* इतः परस्मैपदिनः ।

लटः अश्वेनातिक्रामति-
अश्वयति
,, हस्तिनातिक्रामति-
हस्तयति
लटः-कंसवधमाचष्टेकंसंघातयति-
लुङः कंसमजीघतत्
लटः असिना हन्ति असयति
दर्शनार्थकस्य 'वष्क' धातोः--
चित्रीकरणार्थकस्य 'चित्र' धातोः-
लटः चित्रयति
समाघातार्थकस्य 'अंस' धातोः--
विभाजनार्थकस्य 'वट' धातोः—
प्रकाशनार्थकस्य 'लज' धातोः—
केचित्-'वटि' 'लजि' धातोः--
लटः वण्टयति
,, लजयति
,, वण्टापयति
,, लजापयति
,, कथापयति
,, गणापयति-इत्यादि
सम्पर्कार्थकस्य 'मिश्र' धातोः--
युद्धार्थकस्य 'सङ्ग्राम' धातोः--
लुङः अससंग्रामत
श्लाघार्थकस्य 'स्तोम' धातोः--
लुङः अतुस्तोमत
कर्णभेदनार्थकस्य 'छिद्र' धातोः--
केचित्-करणभेदनार्थकस्य
दृष्ट्युपघातार्थकस्य 'अन्ध' धातोः-

केचित्-उपसंहारार्थकस्य
लुङः आन्दधत्
दण्डनिपातनार्थकस्य 'दण्ड'
धातोः--
पदार्थलक्षणार्थकस्य च 'अङ्क'
'अङ्ग' धातोः--
लुङः आञ्चकत्
,, आञ्जगत्
सुखार्थदुःखार्थकस्य च 'सुख'
'दुःख' धातोः--
आस्वादनार्थस्नेहनार्थकस्यच
'रस' धातोः--
वित्तसमुत्सर्गार्थकस्य 'व्यय'
धातोः--
लुङः अवव्ययत्
रूपक्रियार्थकस्य 'रूप' धातोः--
द्वैधीकरणार्थकस्य 'छेद' धातोः--
लुङः अचिच्छेदत
अपवारणार्थकस्य 'छद' धातोः--
लटः छदयति
प्रेरणार्थकस्य 'लाभ' धातोः--
गात्रविचूर्णनार्थकस्य 'व्रण'
धातोः--
वर्णक्रियाविस्तारगुणवचनाद्यर्थ-
कस्य 'वर्ण' धातो--
लटः वर्णयति सुवर्णम्
,, वर्णयति कथाम्
,, वर्णयति हरिम्

| | | | |
|---|---|---|---|
| हरितभावार्थकस्य 'पर्ण' धातोः-- | | लट् | अवधीरयतीत्यादि |
| लुङः | अपपर्णत् | रामोराज्यमचीकरदितियथेत्याहुः | |
| दर्शनार्थकस्य 'विष्व' धातोः-- | | लटः | हस्तौनिरस्यति हस्तयते |
| प्रेरणार्थकस्य 'क्षप' धातोः-- | | लटः | पादयते |
| निवासार्थकस्य 'वस' धातोः-- | | श्वेताश्वमाचष्टेतेनातिक्रामतिवा- | |
| आवरणार्थकस्य 'तुत्थ' धातोः-- | | लटः | श्वेतयते |
| लटः | आन्दोलयति | लटः | अश्वतरमाचष्टेऽश्वयते |
| ,, | प्रेङ्खोलयति | लटः | तत्करोति गालोडयते |
| ,, | विडम्बयति | लटः | आह्वरयते |

केचिन्मतेपरस्मैपदमपि । बहुलवचनादात्मनेपदमस्तु ।
पुच्छादिषुधात्वर्थमेवसिद्धम् । सिद्धशब्दोग्रन्थान्तेमङ्गलार्थः ॥

इति चुरादिगणधातुप्रक्रियाप्रयोगाः ॥ १० ॥

इति श्रीमध्यपल्लीराजगुरुपण्डित श्रीराघवेन्द्रनारायणमिश्रात्मजा-
चार्य पण्डितश्रीकेशवमिश्रशास्त्रि कृतभ्वाद्यादि
चुराद्यन्तप्रक्रियाप्रयोगसूची सम्पूर्णा ।



प्रदर्शितं स्वरूपमत्र कौमुदीयलौकिकम् ।
प्रगृह्यमानमानिनः स्मृतेः सुखं वहन्त्वति ॥ १ ॥
शम्भुं पितामहं श्रीमद्यज्ञनारायणाभिधम् ।
शश्वन्नुमोगुरुञ्चैवं यत्कृपायाः फलं शुभम् ॥ २ ॥

शम्भवतु सर्वतः

# सिद्धान्तकौमुद्यां भ्वाद्यदाद्यन्तभागे प्रश्नाः ।

## १९२६

### ३ वर्षे २ पत्रम्

१ यासुटो ङित्करणेन भूयादित्यत्र गुणाभावरूपस्य फलस्य सत्त्वेऽपि कथं 'ङित्वोक्तेः' इत्यादिग्रन्थेन प्रतिपादितः दीक्षिताभिप्रायः सङ्गच्छते, कथं वा ङित्वोक्तिः' पारत्यज्य 'शानचः' शित्वमाश्रितमित्युदाहरणपुरस्सरं लेखसौष्ठवेन व्याख्येयम् । ... १०

२ अकि, चकि, ककि, ओखृ, उख, धातूनां लिटि, लुङि, चैकवचने सिद्धानि रूपाणि प्रदर्श्य प्रण्यपक्षत, परिसोढा, गोढा, भृषीष्ट, एतेषां सिद्धिप्रकारः प्रदर्शनीयः । ... १०

३ चिण्प्रत्ययान्तक्रियायां सर्वत्र तृतीयान्तस्यैव कर्तुरन्वयो दृश्यते, एवं सति 'अप्यायि तरुहस्तोऽसौ' इत्यत्र 'असौ' इत्यस्य 'अप्यायि' इत्यत्र कथमन्वयः सङ्गच्छते इति सूत्रस्य सत्त्वेऽपि 'वीर्यं मा न ददर्श त्वं' इति प्रयोगः कथं सङ्गच्छते इति प्रतिपादनीयम् । ... ६

४ आरतुः, बीभत्सते, ऊथतुः, शिश्वाय, एतेषां सिद्धिप्रकारं ब्रूत । १०

५ स्तवीति, उर्णुनाव, अध्यगीष्ट, विदाङ्कुरोतु, एधि, सधि, एतानि साधनीयानि । १०

६ 'भवति' इत्यत्र तिब ँ, नाट्यनृत्ययोर्भेदञ्च प्रतिपाद्य उवोष्ठ, परिसहते, अपोषीत् ३ श्लेषिता, एतेषां साधुत्वमसाधुत्वं चेति युक्तिपूर्वकं लेखनीयम् । १०

## १९३०

१ "कृञ्चानुप्रयुज्यते लिटि" इत्यत्र प्रत्याहाराश्रयणे मानं प्रदर्श्य कृभ्वस्तीनामनुप्रयोगो भवति, सम्पदेस्तु नेत्यत्र वाचोयुक्तिः प्रदर्शनीया । १०

२ षोपदेशान्धातून् तत्फलञ्च प्रदर्श्य 'दन्त्याजन्तसादयः' इत्यस्य लौकिकविग्रह वाक्यं चोपदर्श्य, अचीकमत्, उर्णुनाव, अधुः, ईजतुः—एतेषां प्रयोगाणां साधनं यथाशास्त्रं विधेयम् । १२

३ 'विज्ञापना भर्तृषु सिद्धिमेति', 'तज्ज्ञापयत्याचार्य्यः' इत्यत्र च 'मितांह्रस्वः' इति कस्मान्न प्रवर्तते । ६

४ सधि, जागर्य्यात्, प्राणिति, विश्वसेत, ईयुः, एडढ्वम् , अश्वः, बीभत्सते, प्रणिमयते,—एषु केवलं विशेषकार्य्यं लेख्यम । १३

५ ब्रू—विदोर्लटि, व्येञ—वेञोर्लिटि, प्रथमपुरुषे रूपाणि लिखित्वा 'आत्थ' इत्यत्रेडागमः, 'जहि' इत्यत्र हेर्लुक् च कस्मान्न भवत इत्युच्यताम् । ९

१९३१

१ आनृजे । आञ्छ । सस्वरिव । जुगुप्सते । ऊयतुः । एते विशेष कार्यप्रदर्शनेन संसाध्याः । १२

२ गुप् गुह्—अनयोर्लुङि प्रथमपुरुषैकवचने कति रूपाणि? तानि प्रदर्श्य साधनीयानि । ८

३ जक्षुः । समचक्षिष्ट । ऊर्णुनुविथ । अध्ययत । स्तात् । सुषुषुपतुः । एषां साधुत्वं साधु दर्शयत । ११

४ जागरीत् । शाधि-अनयोः साधुत्वं निर्दिश्य, "अयं सार्वधातुकमात्रविषय" इत्याशयः स्फुटं दर्शनीयः । ११

५ सा धातुके किं? चिकीर्ष्यात्—अस्याः पङ्क्तेराशयो वर्णनीयः । ८

१९३२

१ भविता, एधांचकृषे, देधे, ऊखतुः, विव्यतुः, स्वन्त्स्यति—तत्तद्विशेषकार्योपन्यासपुरस्सरमेतानि रूपाणि सम्यग् साधयत । ९

२ "तस्मान्नुड्द्विहल" इति सूत्रे ऋकारैकदेशस्य रेफस्य हल्त्वेन ग्रहणे, द्विहल् ग्रहणस्यानेक हलुपलक्षणत्वे, च प्रमाणं प्रदर्शयत । ८

३ षोपदेश णोपदेश परिगणनवाक्ये व्याख्याय तयोः फलं साधु प्रतिपादयत । ६

४ गाहू, स्रंसु, गुह्, कृष्, ह्वेञ्, धातूनां लुङि प्रथमपुरुषैकवचने रूपाणि विशेषशास्त्रनिर्देशपूर्वकं साध्यन्ताम् । १०

५ अद्, चक्षिङ्, ऊर्णुञ्, भ्रस्ज, इङ्, ष्वप् दरिद्राधातूनां लिटि प्रथमपुरुषैकवचने रूपाणि विविच्य प्रसाधयत । १०

६ जहि, ऐड्ढ्वम्, आत्थ, अध्यैयत, विदाङ्कुरु, अजागरीत्—एतेषां साधनोपायं साधूपपादयत । ९

१९३३

१ अवेयुः, ऐधिढ्वम्, अचीकमत, अस्यन्त्स्यत्, धिनु, तत्तविशेषकार्योपन्याससुखेनैतेषां सिद्धिप्रकारो लेख्यः । १०

२ सार्वधातुके किम्? चिकीर्ष्यात्—प्रत्यये किम्? वव्रश्च, इमे फक्किके सशङ्कासमाधानं व्याख्येये । ८

३ ओष्ठ, प्रणिमयते, जुगुप्सते, ईजतुः, रूपाणीमानि संसाध्य, तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वादित्यस्य सम्यगाशयो वर्णनीयः १०

४ जक्षतुः, द्विड्ढ, ऐड्ढ्वम्, ऊर्णुनाव, अध्ययं, सधि, विशेषसूत्रनिर्देशपूर्वकमेते प्रयोगाः साधनीयाः । १०

५ गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिनिषेधोऽतो यण्पूर्वाः प्राप्तयो नव ॥
इयं कारिका सव्याख्यानमुदाहरणे सङ्गमनीया । ६

६ ऋतिः सौत्रो धातुरिकारान्तस्तकारान्तो वा ?
ख्याधातोरसार्वत्रिकत्वे किं मानम् ?
"न विश्वसेदविश्वस्तमि"त्यत्र शपो लुगभावो निष्ठाया इडभावश्च कथम् ?
एतेषां सप्रमाणमुत्तरं दातव्यम् ।

१९३४

१ (क) यद्यपि ङिच्चेत्ययमपवादस्तथापीति । (ख) ङित्त्वोक्तेर्ज्ञायते क्वचिदिति ।
(ग) आमुप्रत्ययवदितिसूत्रे कृञ्ग्रहणसामर्थ्यादिति ।
निर्दिष्टफक्किकासु काचनान्यतमा सशङ्कासमाधानं व्याख्येया । ८

२ "अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ॥
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत्" ॥
इयं कारिका सप्रमाणं व्याख्यायोदाहरणे सङ्गमनीया । ६

३ भविता, एधांचकृषे, ऊखतुः, गोपायाञ्चकार, जघृक्षे, तत्तद्विशेषकार्योपन्यास-
मुखेनैतेषां सिद्धिप्रकारो लेख्यः । १०

४ आद्युतत्, ऊमतुः, परिष्कण्णः, ऊवोढ, विव्ययिथ, रूपाणीमानि साधुसाधयत ।१०

५ अघोक्, युयात्, एधि, उड्ढि, विदाङ्कुरुतात्, जक्षति, विशेषसूत्रनिर्देश-
पूर्वकमेते प्रयोगाः साधनीयाः । १०

६ (क) "बाहुप्रतिष्टम्भ विवृद्धमन्युः" । (ख) "उदयति विततोर्ध्वरश्मिरज्जौ" ।
(ग) "कमलवनोद्घाटनं कुर्वते ये" । (घ) "विज्ञापना भर्तृषु सिद्धिमेति" ।
एतेषु अधोरेखाङ्कितानां सिद्धिप्रकारो विरोधप्रदर्शनपुरस्सरं वाच्यः ।

१९३५

१ भवेयुः, एधांचक्रे, निषेधति, विवयिथ—तत्तद्विशेषकार्योपन्यासमुखेनैषां सिद्धि-
प्रकारो लेख्यः । ८

२ अचीकमत, स्यन्त्स्यति, जुगुप्सते, विव्याय—विशेषसूत्रनिर्देशपुरस्सरमेते
प्रयोगाः साधनीयाः । ८

३ "श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि" ॥
इयं कारिका सप्रमाणमुदाहरणमुखेन व्याख्येया । ८

४ अद्विषन्, अध्यगीष्ट, सुषुपतुः, अजागरीत-रूपाणीमानि साधु साधयत । ८

५ ओप्यायी वृद्धौ, गुडू संवरणे, धेट् पाने, ऊर्णुञ् आच्छादने, धातूनामेषां लुङि
प्रथमपुरुषैकवचने कति रूपाणि, कथञ्च तत्सिद्धिः । १२

३ (क) अनुदात्तङित आत्मनेपदमिति सूत्रे धातोर्लस्येत्यर्थः कुतो लभ्यते, किञ्च तत्फलम् ।
(ख) भुवोवुग्लुङ्लिटोरित्यत्रलुङ्लिटोरवीति विशेषणस्य किं प्रयोजनम् । ६

१९३६

१ अभूत्, ऐधिढ्वम्, आञ्छ, तित्सीष्ट, अघाक्षि । सूत्रोपन्यासपुरस्सरमेतानि रूपाणि साधु साधयत । १०
२ आष्टाम्; अपप्तत्, खायात्, अगे, ऊवे । विशेषकार्योपन्यासमुखेनैते प्रयोगाः साधनीयाः । १०
३ (क) क्रादिनां चतुर्णां ग्रहणं नियमार्थम् । (ख) संज्ञायाः कार्यकालत्वादित्यादि । अनयोः काचनान्यतरा फक्किका सशङ्कासमाधानं व्याख्येया । १०
४ ऐड्ढ्वम्, सुवै, और्णोः, अध्ययौ, शाधि । एतेषां सिद्धिप्रकारा लेख्यः १०
५ (क) 'स्फायन्निर्मोकलन्धोति' । (ख) 'पर्यवसितं नियमयन्' ।
(ग) 'रजा विश्रामयन् राज्ञाम्' । (घ) 'ससीतयो राघवयोरधीयन्' ।
(ङ) 'न विश्वसेदविश्वस्तम्' । एतेषु वाक्येषु विरोधप्रदर्शनपुरस्सरमधो रेखाङ्कितपदानां सिद्धिःकर्तव्याः । १०

१९३७

१ उत्तम्भते, तितिपिषे, स्यन्त्स्यति, श्रियात्, अभ्रमीत्, इमानि रूपाणि साधयत।१०
२ प्रणिमयते, ऊखतुः, धिनवाव, विव्यतुः, आनृजे, अगूढ, जघृक्षे, रेजे । एषु कानिचित्पञ्च रूपाणि सविशेषं साधनीयानि । १०
३ घसधातोः ख्याधातोर्वा केषु लकारेषु प्रयोगो भवतीति सप्रमाणं व्यवस्थापय । १०
४ निम्नलिखितेषु केषुचिच्चतुर्षु वाक्येषु विरोधमुद्भाव्य तत्परिहारः करणीयः— १०
(क)—'उदयति विततोर्ध्वरश्मिरज्जौ' (ख)—'कमलवनोद्घाटनं कुर्वते ये'
(ग)—'विज्ञापना भर्तृषु सिद्धिमेति' (घ)—'नमोवाकं प्रशास्महे'
(ङ)—निशामय तदुत्पत्तिम्' (च)—'स्फायन्निर्मोकसन्धि' ।
५ जक्षिथ, अवधीद्, अधुक्षत्, आस्ताम्, सधि-एषु विशेषकार्याणि दर्शयत । १०

१९३८

१ भवतात्, न्यषेधीत्, अम्रुचत्, विस्तम्भते, ध्वंसीष्ट, एते प्रयोगाः साधु साधनीयाः । ... १०
२ अक्ष्यति, प्रविवाटयिता, भ्रेमतुः, अगुह्वहि, ओषीष्ट, एतेषुसाधुत्वमन्वाख्येयम् । ... १०
३ जुगुप्सांचक्रे, पर्यष्वङ्क्त, अयंसिष्टाम्, आध्वम्, औष्टाम्, इमानि साधु साधनीयानि । ... १०

४ ग्रुचुधातोर्लुङि, अपेर्निटि, कृपेर्लुटि, गातेर्लिङि, जाग्रो लङि लुङि च प्रथमपुरुषैकवचने रूपाणि विशेषविधिविधानपूर्वकं लेख्यानि । ... १०

६ ( क ) लः कर्मणि च भावे चाकर्मकेभ्यः । ( ख ) सन्वल्लघुनि चङ्परेऽनग्लोपे । ( ग ) अतो येयः । ( घ ) णेरनिटि । ( ङ ) अस्तिसिचोऽपृक्ते ।
एषु सद्वितीयं किमपि सूत्रमेकमुपपत्त्यनुपपत्तिप्रदर्शनपूर्वकं व्याख्येयम् । ... १०

अथवा

(क) सार्वधातुके किं चिकीर्ष्यात् । । (ख) संज्ञायाः कार्यकालत्वादित्यादि ।
(ग) नान्येमितोऽहेताविति ।
एतासामन्यतमे फक्किके व्याख्येये । ... १०

---

१९२६

व्याकरणमध्यमापरीक्षायाम् ।

४ वर्षे १ पत्रम् ।

सिद्धान्तकौमुद्याजुहोत्यादिगणादिनामधात्वन्तभागेप्रश्नाः ।

१ अविभरुः, अजरत्, अरुणः, अकृत, मृदान–एते कथं सिध्यन्ति । १०

२ ओः पुयण्जीति सूत्रे पयोरिति वक्तव्ये वर्गप्रत्याहारजकारग्रहो लिङ्गमित्यादि फक्किकोपपादनीया । १०

३ अपीप्यत्, अतिष्ठिपत् विलालयति, भीषयते, रोपयति, दूषयति–एषु विशेषसूत्राणि कानि । १०

४ छिवधातो रूर्णुधातोश्च सनि प्रत्यये लटि प्रथमपुरुषैकवचने कति रूपाणि, कीदृशानि च तानि भवन्ति । १०

५ अर्थवन्तमाचष्ट इति, उत्कमाचष्टेति, याचिता रमाऽऽख्यदिति च विग्रहे णिचि लटि लङि लुङि च प्रथमपुरुषैकवचने कीदृग्रूपाणि भवन्ति । १०

१९३०

१ बध्यः. अदास्त, जिघाय, आनर्छ, अतृठ्, असात, गृहाण, चपयति, अजूहवत्, धिप्यति, पम्फुल्यते, जङ्घनीति इमानि रूपाणि सधातुनिर्देशं विशेषसूत्राणामुपन्यासेन साध्यानि । १६

२ अभिषेणयति, वावज्यते, कूलं पिपतिषति, दोषयति, अश्वयते, औवजिजत् इमानि रूपाणि विशेषकार्योपन्यासेन साधनीयानि । ११

३ 'णिच्यजादेशो न स्याद्' इति फक्किकोपपादनीया । ९

४ हिंसायां प्रतेश्च, उपात्प्रतियत्न वैकृतवाक्याध्याहारेषु च, आख्यानात्कृतस्त-दाचष्टे कृल्लुक् प्रकृति प्रत्यापत्तिः प्रकृतिवच्च कारकमिति सूत्रवार्तिकानि व्याख्यायोदाहरणानि लेख्यानि । ९

५ उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियत इत्यत्र प्रमाण फलं च प्रदर्शनीये । ६

१९३१

१ ओहाङ्, ओहाक्, खव् धातूनां हौ, दीङ् लीङ् धात्वोर्णिलि, नशेर्लुटि, वृञ आशीर्लिङि प्रथमपुरुषैकवचने, ऋच्छ, मृजोस्तुसि च सिद्धरूपाणि प्रदर्श्य तेषु विशेषकार्याणि ब्रूत । १०

२ रुन्धन्ति, अतत, क्षिणोति, एषिता—एतानि शङ्कासमाधानपूर्वकं साधनीयानि । १०

३ चुरादौ पृधातौ दीर्घोच्चारणस्य फलमुक्त्वा लज्जापयति, गालोडयते, अस-यति—एषु विशेषं ब्रूत । ८

४ अट, वच, चर, जन धातूनां यङि, उब्ज, वा, ली धातूनाञ्च णिच लुङि च विशेषकार्य्यप्रदर्शनपूर्वकमेकैकं रूपं लेख्यम् । १०

५ 'अज्झनगमां सनि' इत्यत्र 'अजादेशगमेः' इत्यर्थलाभप्रकारं लिखित्वा किमः क्यचि, युवतेः क्यङि, ऊढिम्, अदद्द्रयञ्चाख्यदिति विग्रहे णिचि रूपेषु विशेषकार्य्याणि दर्शनीयानि । १०

१९३२

१ अधोलिखितपदानि सूत्रोपन्यासपूर्वकं साधनीयानि—अलिक्ष्यत, प्रनङ्क्ष्यति, ऐयः, जजन्ति, दुधुविव । १०

२ रुन्धन्ति, संस्क्रियात्, अबान्द्धाम्, खौनाति—एते प्रयोगाः ससमन्वयं साधनीयाः । १०

३ पृपूर्णेऽत्र दीर्घनिर्देशस्य फलम्प्रदर्श्य प्रापयति, औननत्, अर्पीटत्, एते शङ्का-समाधानपूर्वकं साधनीयाः । १०

४ अरिरिषति, ईप्सति, अवनीवन्, शाशय्यते, चञ्चूर्त्ति—एते विशेषसूत्रनिर्देशपूर्वकं साधनीयाः । १०

५ अभिषिषेणयिषति, पटपटायते, स्वमनायत, एतान् संसाध्य, सपत्नीवाचरतीति विग्रहे कियन्ति रूपाणीति प्रक्रियानिदर्शनपूर्वकं ब्रूत । १०

१९३३

१ पपक्षः, अभृत, जिगति, दिदीये, एतान् सूत्रार्थोपन्यासपूर्वकं संसाध्य राधोऽक-र्मकाद् वृद्धावेव इत्यत्रैवकारस्य भिन्नक्रमत्वे प्रमाणं फलञ्च वदत । १०

२ ररन्धिव, स्तरिषीष्ट, जिघाय, अष्टा, एषां सिद्धिप्रकारमभिधाय, आलिङ्गने इति सूत्रस्य विधायकत्वे को दोषः, सुस्पष्टमुच्यताम् । १०

३ बभ्रज्ज, सिञ्चति, तृणेढि, खौनीहि एतान् विशेषकार्य्यप्रदर्शनपुरःसरं साधयित्वा, ऊनधातौ ज्ञापकस्य सजातीयाऽपेक्षत्वे फलं प्रमाणञ्च निरूपणीयम्। १०

४ ऐर्ष्यियत, उर्णुनुविषति, अरिरिषति, सिस्वादयिषति, एषु विशेषकार्य्याणि दर्शयत। १०

५ जघङ्न्यते, चञ्चूर्त्तः, अजर्घर्त्, ओजायते, फेनायते, एषां सिद्धिं विलिख्य सपत्नीवाचरतीति विग्रहे रूपाणि वदत। १०

१९३४

१ जह्यात्, जुहुयात्, नेनिजानि, अजुः। एतान् विशेषसूत्रार्थोपन्यासपूर्वकं संस्कृत्य दिवादेराकृतिगणत्वे फलप्रमाणे निरूपणीये। १०

२ विसोष्यति, प्रहिणोति, उपस्किरति, स्कुनोते। एतेषां साधुत्वं यथासूत्रमभिधाय पूरणार्थकपॄधातोदीर्घकारोच्चारणस्य फलं निरूप्यताम्। १०

३ चपयति, अलुलोकत, अपीपृथत्। एतेषां संस्कारप्रकारं प्रदर्श्य, असिना अवधीदिति विग्रहे रूपञ्च साधयत। १०

४ जिघांसति, दुद्यूषति, तितंसति, वावश्यते, वर्वृतः, चक्रौ। एषां साधुत्वं वदत। १०

५ अजहासीत्, सुमनायते, अजहलत्, के विधयः संस्कारका एतेषामिति सविचारमुच्यताम्। १०

६ परिपृच्छयते, वाष्पायते, अचकशत्। एतान् साधयित्वा यकारान्तवकारान्तोऽभाविभ्यो यङ्लुक् कथं निराकरणीयः। १०

सूचना—एषु पञ्चैव प्रश्नाः समाधेयाः।

१९३५

१ पिपूर्ष्यात्, जहीहि, धत्थ, एतान् विशेषसूत्रार्थप्रदर्शनमुखेन संस्कृत्य, ओहाक्–ओहाङोरनुबन्धफलं प्रदर्श्यताम्। १०

२ दिदीये, उदूर्जिजिता, एतयोः साधुत्वं ससूत्रनिर्देशं प्रदर्श्य, भञ्ज्, वन्, ऋण्, धातूनां लुङि सिपि रूपाणि साध्यन्ताम्। १०

३ अग्रहीष्टाम्, अचिकीर्त्तत्, अध्यापिपत्, एतेषां संस्कारप्रकारं प्रदर्श्य असिस्वदिदितिरूपं साधयता भवता स्वतीति सूत्रे धात्वक्षरे परे इत्यंशे किं प्रमाणन्तदुच्यताम्। १०

४ एर्षिष्यत्, जुघुक्षति, बिभ्रजिषति, चञ्चूर्य्यते—एतेषां साधुत्वं प्रदर्श्य, अव्यवहितसनारभावे मुनित्रयान्यतमवचनं प्रमाणीक्रियताम्। १०

५ अजङ्घनात्, अचकारीत्, सुमनायते, एतान् प्रसाध्य उपसर्गसमानाकारस्य पृथक्कारे किं प्रमाणम्। १०

६ मामार्ति, औडिढत्, वारयति, अदद्दायत्, कतयति एते साध्यन्ताम्। १०

सूचना—एषु पञ्चैव प्रश्नाः समाधेयाः।

१९३७

१ हु-पॄ-निज-ऋधातूनां लटि, दीङो लुटि, अस्यतेर्लुङि च प्रथमपुरुषैकवचनरूपाणि ससूत्रं प्रदर्श्य, 'रराधतुः', इत्यत्रैत्वाभ्यासलोपाभावौ सप्रमाणमुपपादनीयौ । ११

२ वृणोतेराशीर्लिङि, दम्भेर्ऋच्छेश्च लिटि प्रथमपुरुषैकवचनरूपाणि सन्साध्य 'अतर्पीत्' इत्यत्र 'स्पृश-मृश' इत्यस्याप्रवृत्तिः समर्थ्यताम् । ७

३ कूर्य्यात्, विच्छायति, अरुणः, आनक्, एतेषु असाधारणकार्य्यमुल्लिख्य; षदेरौवादिकत्वेऽपि तुदादिपाठफलम्, संस्क्रियात्' इत्यत्र गुणेटोरभावप्रकारञ्च वर्ण्यताम् । १०

४ व्यष्टभत्, श्वेतयते, एतयोः कार्य्यविशेषमात्रमभिधाय 'णिच्यच आदेशो न स्यात्' इति फक्किका सिद्धान्तप्रदर्शनमुखेन स्वशब्दैर्व्याख्येया । १०

५ सपत्नीव द्यौरिव चाचरति, कलिं गृह्णाति, स्नानमाचष्टे, अमुमुयञ्चमाख्यत्, इति विग्रहे तिपि रूपाणि प्रतिपाद्य, 'स्वमनायत' 'ओढायित्वा' इत्यनयोर्ग्रन्थोक्तपूर्वोत्तरपक्षौ सुस्पष्टं स्वगिरा प्रदर्शनीयौ । १२

अथवा,

'उचिच्छिषति' इत्यत्र मूलोक्तशङ्कासमाधाने, यङ्लुगन्तादात्मनेपदाभावञ्च प्रतिपाद्य, धनवन्तम्, धातारञ्चाचष्टे, इति विग्रहे णिचि तिपि रूपे लेखनीये । १२

१९३८

१ बन्धः, अदास्त, अक्राक्षीत्, भ्राष्ट-एषु ससूत्रं साशङ्कम् असाधारणं कार्य्यं प्रादर्श्य "स्थानषष्ठीनिर्देशाद् रोपधयोर्निवृत्तिः" इति पङ्क्तिर्व्याख्येया । …१०

२ अतृणेट्, पर्य्यङ्कार्षीत्, अबान्धाम्, खौनीहि—एतेषु कार्य्यविशेषं सप्रमाणं विज्ञाप्य, धूधातोर्गणभेदेन रूपाणि दर्शनीयानि । …१०

३ उब्जस्वप्योर्णिचि, मोदाप्योः सनि, श्विफल्योर्यङि, लुङि तिपि रूपाण्युल्लिख्य 'जाग्रहिता' इत्यत्र दीर्घतदभावौ माधवादिमतभेदेन वर्णनीयौ । ८

४ आरति, मामोति, ऊः, पटपटायते, कनयति, श्रापयति, एषां साधुत्वं प्रदर्श्य 'औजिढत्' इत्यत्र 'ढ्लोपे' इति दीर्घः कस्मान्नेति लेख्यम् । …१२

५ "कथं तर्हि विस्मापयन् विस्मितमात्मवृत्तौ इति" अवगल्भांचक्रे इत्यत्र "भूतपूर्वादप्यनेकाच आम्" इति च पङ्क्तिं विशदं वर्ण्यताम् । …१०

अथवा

अदित, अभ्यष्यत्, जिघाय, आनर्फ, औनः—एते धातुप्रत्ययप्रदर्शनपुरस्सरं साधनीयाः । —१०